मोक्त्वा एष ते गन्धः स्वधा। एवमेतत्ते पुष्पम्। एत
हिरण्यमित्यादि॥ प्रेते तु गोत्र प्रेतेदमुपतिष्ठतामिति द
त्। ततो ब्राह्मणानां पुरतो नीवारचूर्णेन पाषाणचूर्णेन
गोमयजलेन च पितृपूर्वं मण्डलानि कृत्वा, तत्र प्रक्षालि
तानि पात्राणि स्थापयेत्। तत उपवीती प्रेतस्य पित्राद्य
र्थपाकाद्घृताक्तमन्नमुद्धृत्याग्नौ करिष्यामीति पितॄननुज्ञाप
कुर्विंत्यनुज्ञातः साग्निकश्चेत्कर्त्ता गृह्याग्निसमीपमागत्योप
विश्योपवीती क्षिप्रहोमविधिना गृह्याग्नौ जुहुयात्। अन
योः प्रजापतिर्ऋषिर्यजुः पितरो देवतोपघातहोमे विनि
योगः। स्वाहा सोमाय पितृमते इति हुत्वा स्वाहाऽग्नये
कव्यवाहनायेति द्वितीयं हुत्वोपरिष्टात्तन्त्रं समापयेत्।
निरग्निकश्चेद्भवत्स्वेवाग्नौकरणं करिष्ये इति पृष्ट्वा पितृ
पङ्क्तिमुख्यब्राह्मणहस्तं भोजनपात्रे कृत्वा हस्ते शुद्धोदकं
दत्वा पूर्वोक्ताहुतिद्वयं कुर्यात्। ब्राह्मणाभावे जले उक्ताहु-
तिद्वयं कुर्यात्। हुतशेषं पिण्डार्थं किञ्चिदवशोष्य प्रेतभि-
न्नपित्रादिपात्रेषु प्रक्षेप्तव्यम्। ततो भोजनपात्राण्यभिघा-
र्यान्नपरिवेषणं कृत्वाऽन्नसङ्कल्पं कुर्यात्। प्रेतपाकादु-
द्धृत्य प्रेतपात्रे परिवेषणम्। तत उपवीती भोजनपात्रं
वामहस्तेन स्पृष्ट्वा, ॐ सत्यं त्वर्त्तेन परिषिञ्चामीत्यन्नम-
भुक्ष्याग्रे प्रादक्षिण्यं यवान्विकीर्य न्युब्जीकृताभ्यां दक्षि-
णोत्तराभ्यां पाणिभ्यां पृथिवी ते पात्रमिति भोजनपात्र-
मालभ्य जपेत्। पृथिवी ते पात्रं द्यौरभिधानं ब्राह्मणस्य
मुखे अमृते अमृतं जुहोमि स्वाहा॥ तत इदं विष्णुर्वि-

चक्रम इति भोक्तुरङ्गुष्ठमन्ने स्थापयेत्। इदं विष्णुर्विच-
क्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुले॥ अथवा
विष्णो हव्यꣳ रक्षस्वेतियजुषाऽङ्गुष्ठमन्ने स्थापयेत्। ततो
वामहस्तेनान्नपात्रमालभ्य दक्षिणहस्तेन कुशोदकमादाय
इदमन्नाद्यातृप्तेर्दत्तं दास्यमानञ्च कालकामसञ्ज्ञकेभ्यो
विश्वेभ्यो देवेभ्यः स्वाहेति देवब्राह्मणपुरतो जलमुत्सृजे-
त्। ततः प्रेतपात्रे तूष्णीं प्रोक्षणं भोक्तुरङ्गुष्ठमन्ने ऽवगा-
ह्येदमन्नाद्यातृप्तेर्दत्तं दास्यमानञ्चामुकगोत्रामुकप्रेत तवो-
पतिष्ठताम्। तत उपवीत्याऽऽचम्य पुनः प्राचीनावीती
पितृधर्मेण सत्यं त्वर्तेनेत्यभुक्ष्याप्रादक्षिण्येन पुरतस्ति-
लान्विकीर्य्य सव्योत्तराभ्यां पाणिभ्यां भोजनपात्रमालभ्य
पृथिवी ते पात्रमिति जपित्वेदं विष्णुरिति वैष्णव्या
ऋचा, विष्णो हव्यꣳ रक्षस्वेति यजुषा वा, भोक्तुरङ्गुष्ठ-
मन्ने स्थापयेत्। ततो वामहस्तेनान्नपात्रमालभ्य दक्षिण-
हस्तेन कुशोदकमादायेदमन्नाद्यातृप्तेर्दत्तं दास्यमानं च
गोत्राय प्रेतस्य पित्रे शर्म्मणे स्वधा पितृब्राह्मणपुरतो ज-
लमुत्सृजेत्। अप उपस्पृश्यैवमेवेतरयोः। तत अपोशना-
र्थं पितृपूर्वं क्रमेण जलं दत्वा सव्याहृतिकां गायत्रीं म-
धुमतीमृचं जपित्वा मधुमधुमध्विति च त्रिर्जपित्वा य-
थासुखं जुषध्वमिति वदेत्। ॐ भूर्भुवः स्वः तत्सवितुर्व-
रेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्॥
मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः स-

न्त्वोषधीः ॥ मधु नक्तमुतोषसि मधुमत्पार्थिवꣳर
मधुद्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाꣳ अ
सूर्यः । माध्वीर्गावो भवन्तु नः ॥ मधुमधुमधु इति । ।
ममृतोपस्तरणमसीति प्रतिब्राह्मणं वदेत् । ततो ब्राह्मण
युगपत्पूर्वापोशने प्राणाहुतिषु च तत्समकालं तान्मन्त्र
न्क्रमेण सकृदेव पठेत् । सर्वत्रामृतोपस्तरणमसि । प्र
णाय स्वाहा । व्यानाय स्वाहा । अपानाय स्वाहा । सम
नाय स्वाहा । उदानाय स्वाहा । ब्रह्मणे स्वाहा ॥ ततं
व्याहृतिसामादीन्यभिश्रावयिष्ये इति भोक्तॄन्पृष्ट्वाऽभि
श्रावयेति तैरनुज्ञातः कर्त्ता व्याहृतिसामादीन्यभिश्राव
येत् । अशक्तश्चेत्तत्पठनार्थमृत्विजो वृणुयात् । ततः सव्ये
सव्याहृतिकां सावित्रीं तस्याश्चैव गायत्र्यं यद्वा ऊर्विश
तिरित्यादि पितृसंहितां विहायेदं ह्यन्वोजसेत्यादि माधु

च्छन्दसीं संहितामश्नत्सु द्विजेषु जपेत् । यथा ॐ भूर्भुवः
स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः
प्रचोदयात् ॥ १ ॥ ॐ तत्सवितुर्वरेणियोम् । भार्गोदेवस्य
धीमाहि२ । धियो यो नः प्रचो१२१२ । हुम् । आ२ । दायो ।
आ२३४५ ॥ २ ॥ इदाद्मे । हिया३नूओ१जासा२ । सुतꣳ-
राधा । नाम्पा१ ता२यिपिवातुवस्यागीर्वाणा२३४ः । पिवा-
३४तुवा२ । स्या२गा२३४औहोवा । वा२३४णाः ॥ १ ॥

अजायार३ता । आइन्द्रोविश्वार । स्याकर्म्मार३४णाः ।
धर्त्ता । वाओवा ओर३४वापुरु५ष्टुताः । होऽ५इ । डा ॥६॥
ओवा । उपप्रक्षमधूमति क्षियन्तः । ओ वा । ओ इ ।
पुष्येमरइन्धिमहेत आर३यिन्द्रा । ओ । वाओवा । ओ ।
वा हा२१उवा३४ । ऊ३४पा ॥ ७ ॥ हा ओर३४हाइ ।
इहा३१ । पवस्वसो । मा३मधु । मा२ऋतावा । अपोवसा ।
नो३अधि । सानोअव्यायि । अवद्रोणा नी३घृत । वन्ति
रोहा । हा ओर३४हाइ । इहा३१ । मदिन्तमो मत्सरः ।
आ२४३यि । द्रा३पा५ना६५६ः ॥ ८ ॥ सुरूपक्रुत्नुमूतयेसु-
दुघामा । वगोर । दुहया२१उवा२३ । इ२३४डा । सू२३४वाः ।
जुहुमा२३सी । धविद्यविया२१उवा२३ । ज्यो२३४तीः ॥ ९ ॥
इति माधुच्छन्दसी संहिता ॥ भोजनान्ते प्रेतपात्रे न
विकिरदानम् । प्राचीनावीती प्रेतस्य पितुरुच्छिष्टस्य पुरत-
श्चतुरङ्गुलदेशे दर्भानास्तीर्य्य प्रत्यगपवर्गमपो निनीय तत्र
येरग्निदग्धा इतिमन्त्रेण पितृतीर्थेन तिलमिश्रितमन्नं
विकिरेत् । ये त्वग्निदग्धा जीवा ये येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ततः कर्त्ता

ाणिपादौ प्रक्षाल्य द्विराचम्य, हस्तकुशान्त्यक्त्वा ऽन्य
ान्धृत्वा, द्विजेभ्यः प्रेतपूर्वमुत्तरापोशनं दत्त्वा, सव्या
कां गायत्रीं मधुमतीश्च त्रिर्जपित्वा ऽऽचान्तेषु प्रेतभि
ाः स्थ इति पृच्छेत्। उपवीती विश्वेदेवास्तृप्तास्स्थ
ास्म इति प्रतिवचनम्। प्राचीनावीती। गोत्र प्रेत स्व
दितम्। अस्तु स्वदितम्। प्रेतस्य पितृपितामहप्रपिताम
ास्तृप्ताः स्थ। तृप्ताः स्म इति प्रत्युक्ते प्रेतभिन्नविप्रेष्व-
शेषाभ्यनुज्ञा। अन्नशेषैः किं? क्रियतामिति पृष्ट्वा, इष्टै-
सह भुज्यतामित्यनुज्ञातो ब्राह्मणानां हस्तक्षालनात्पूर्वमु-
च्छिष्टसन्निधौ पिण्डान्दद्यात्। प्रेतपाकान्नेन प्रेतपिण्डः।
प्राचीनावीती वाग्यतो यजमान उच्छिष्टपात्रस्य बाहुमा-
त्रप्रदेशे चतुरस्रं मण्डलं विधाय, गोमयेनोपलिप्य, तत्प-
श्चिमभागे प्रेतस्य पित्राद्यर्थं तथैव मण्डलं विधाय, तत्र-
दक्षिणाप्रवणां सैकतेनोभयत्र वेदिकां कृत्वा ऽभ्युक्ष्य,
दक्षिणाग्रान्कुशानास्तीर्य्य, प्रेतपिण्डे नोल्लेखनं सव्येन
पिञ्जूलीं गृहीत्वा, सव्यादक्षिणेन पिञ्जूलीं गृहीत्वा पिञ्जू-
ल्यग्रेणास्तृतकुशोपर्यपहता इतिमन्त्रेण दक्षिणाग्रां रेखा-
मुल्लिखेत्। अस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता लेखो-
ल्लेखने विनियोगः। अपहता असुरा रक्षांसि वेदिषदः॥
ततः पिञ्जूलीं त्यक्त्वा ऽप उपस्पृशेत्। प्रेतपिण्डस्थले ना-
वाहनम्। एत पितर इतिमन्त्रेण प्रेतपितॄनावाहयेत्। ततः
प्रेतपिण्डस्थाने ऽमुकगोत्र पितः प्रेत पिण्डस्थाने ऽवने-
निक्ष्व। ततो द्विगुणकुशजलमादाय, प्राचीनावीती वाम-
जानु भूमौ निधाय, पितृतीर्थेनास्तृतकुशमूलेषु अमुकगोत्र

पितरमुकशर्मन्नवनेनिक्ष्व ये चात्र त्वामनुयांश्च
तस्मै ते स्वधा ॥ अप उपस्पृश्य पुनः कुशमध्येषु,
गोत्र प्रेतस्य पितामहामुकशर्मन्नवनेनिक्ष्व ये चा
त्यादि। पुनः कुशाग्रेषु, अमुकगोत्र प्रेतस्य प्रपिताम
कशर्मन्नवनेनिक्ष्व ये चात्र त्वेत्यादिप्रत्यवनेजनमप
स्पृशेत्। प्रेतपाकान्नेन पिण्डं कृत्वा प्रेतपिण्डावने
स्थाने ऽमुकगोत्रामुकप्रेत पितरेष ते पिण्ड उपतिष्ठत
तत आचम्य प्रेतस्य पित्रादीनामवनेजनक्रमेण पिण्
दद्यात्। पित्रादिपाकशेषादल्पमल्पं गृहीत्वा, तत्राज्य
वनीय हुतशेषेण मिश्रीकृत्य, तिलान् संयोज्य, बिल्व
त्रान्त्रीन् पिण्डान् कृत्वा, दक्षिणहस्तेन गृहीत्वा, स
नान्वारभ्य, पितृतीर्थेनामुकगोत्र प्रेतस्य पितरमुकशर्मं
ते पिण्डः ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा
अप उपस्पृश्यैवं पितामहप्रपितामहयोः पिण्डौ तत्तन्ना
मोक्त्वा क्रमेण स्थापयेत्। ततः प्रेतपिण्डे प्रत्यवनेज
नादि, न पित्रादिपिण्डेषु प्रत्यवनेजनम्। प्रेतपिण्डपा
त्रक्षालनजलेनप्रत्यवनेजनाद्यभिरम्यतामितिप्रेतार्थनिमन्त्रि
तब्राह्मणविसर्गान्तमाद्यमासिकैकोद्दिष्टश्राद्धवत्कुर्य्यात्।
ततः पिण्डसंयोजनम्। आचम्य गोत्रस्यामुकप्रेतस्य प्रेत-
त्वविमुक्तिपूर्वकं वस्वादिपितृत्वप्राप्त्यर्थं गोत्राणां वसुरुद्रा-
दित्यस्वरूपाणां प्रेतस्य पितृपितामहप्रपितामहानाममुका-
मुकशर्मणां पिण्डैः सह प्रेतपिण्डस्य संयोजनं करिष्ये।
कुरुष्वेत्यनुज्ञातः सुवर्णादिशलाकया कुशेन च प्रेतपि-
ण्डस्य त्रिभागं कृत्वा, ये समाना इतिमन्त्रद्वयं पठित्वा,

मुकगोत्रस्यामुकप्रेतस्य पिण्डस्य प्रथमभागो गोत्रस्य
र्म्मणो वसुरूपस्य प्रेतस्य पितुः पिण्डेन सह संयुज्य-
ाम् । संयुताः स्म इति प्रतिवचनम् । दधिमधुभ्यां
श्रीकुर्य्यात् । ततः प्रेतपिण्डस्य द्वितीयभागो गोत्रस्य
र्णो रुद्ररूपस्य प्रेतस्य पितामहस्य पिण्डेन सह
ुज्यताम् । संयुताः स्म इति प्रतिवचनम् । मिश्रणं
वत् । पुनः प्रेतपिण्डस्य तृतीयभागो गोत्रस्य शर्मण
दित्यरूपस्य प्रेतस्य प्रपितामहस्य पिण्डेन सह संयु-
ताम् । संयुताः स्म इतिप्रतिवचनम् । मिश्रणं पूर्व्वव-
ततः पिण्डपात्रक्षालनजलेन प्रत्यवनेजनं कृत्वा पिण्ड-
मधोमुखं स्थापयेत् ततोऽत्र पितरो मादयध्वमिति
ते । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता
जप विनियोगः । अत्र पितरो मादयध्वं यथाभागमावृषा-
यध्वम् ॥ अप्रादक्षिण्येन पर्य्यावृत्योदङ्मुखो दक्षिणाभि-
मुखो वा ऽनुच्छ्वसन्नमीमदन्त पितर इति जपेत् । अस्य
मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता जपे विनियो-
गः । अमीमदन्त पितरो यथाभागमावृषायिषत ॥ ततः
कृताञ्जलिर्नमो वः पितरः पितर इति जपति । अस्य
प्रजापतिर्ऋषिर्दक्षिणाच्छन्दः पितरो देवता जपे विनियो-
गः । नमो वः पितरः पितरो नमो वः ॥ ततः पत्नीमन्त्रे-
क्षते । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता
पिण्डावेक्षणे विनियोगः । सदो वः पितरो देष्म ॥ ततः
सव्येन हस्तेन दर्भासादितसूत्रं गृहीत्वा दक्षिणेनावार
सव्येनारभ्य पितृतीर्थेन प्रत्येकपिण्डे निदध्यात् । अ-

मुकगोत्र पितरमुकशर्मन्नेतत्ते वासः ये चात्र त्वमनु
श्च त्वमनु तस्मै ते स्वधा ॥ तत अप उपस्पृश्य पि
महनामयुक्तमन्त्रेण पितामहपिण्डे निदध्यात् । तथैव
पितामहपिण्डे सूत्रं निदध्यात् । अत्रापि दक्षिणहस्त
सूत्रनिधानं वामेनान्वारम्भः । यथाचारं गन्ध-पुष्प-धू
दीप-नैवेद्यादिभिः पिण्डपूजनम् । ततो भोक्तृभ्यो मुख
हस्तप्रक्षालनाद्यर्थमुदकं दत्वा स्वयं हस्तौ प्रक्षाल्यानामे
त् । आचान्तेषु भोक्तृषु सव्येन सुसम्प्रोक्षितमस्त्विति
द्विजाग्रभूमिं जलेनासिञ्चेत् । अस्त्विति प्रतिवचनम् ।
शिवा आपः सन्त्विति द्विजहस्तेषु जलं प्रयच्छेत् । सौ
मनस्यमस्त्विति भोक्तृहस्तेषु कुसुमानि । अक्षतञ्चारिष्टं
चास्त्वित्यक्षतान् दद्यात् । अथ प्राचीनावीती सव्यं जा
न्वाच्य कुशोदकं गृहीत्वा अमुकगोत्रस्य पितुरमुकशर्मणो
दत्तं सपिण्डीकरणश्राद्धमक्षय्यमस्त्विति पितृब्राह्मणहस्ते
जलं दद्यात् । अस्त्वक्षय्यमिति भोक्तृप्रतिवचनम् । अप
उपस्पृश्य, एवं पितामहप्रपितामहयोः । तत अघोराः पि-
तरसन्त्विति कर्त्ता वदेत् । सन्त्वघोराः पितर इति प्रति-
वदेयुर्भोक्तारः । गोत्रं नो वर्द्धतामिति कर्त्ता । वर्द्धतामि-
ति भोक्तारः । ततो न्युब्जीकृतपित्रर्घ्यपात्रे स्थापितान्
स्वधानिनयनीयान् सपवित्रान् कुशान् सव्येनाप्रदक्षि-
णयेनादाय, पित्रादिपिण्डोपरिक्रमेणास्तीर्य, स्वधां वा-
चयिष्य इति पृच्छति । वाच्यतामिति भोक्तारः । ततो
गोत्रेभ्यः पितृभ्यः शर्मभ्यः स्वधोच्यतामिति कर्त्ता ।

तु स्वधेति भोक्ता प्रतिवदेत्। पितामहेभ्यः प्रपिता
भ्य इति विशेषः। ततो न्युब्जीकृतपित्रर्घ्यपात्रमुत्ता
कृत्वा तेनोदकमादाय पित्रादिपिण्डत्रयोपरि धारां द
दूर्जं वहन्तीरिति। ऊर्जं वहन्तीरमृतं घृतं पयः की
लं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् ॥ ततो दे
हस्ते जलं दत्वा विश्वेदेवाः प्रीयन्तामिति वाचयेत्
यन्तां विश्वेदेवा इति प्रतिवचनम्। ततः पिण्डा
जनपात्राणि च स्वस्थानाच्चालयेत्। ततो देवपूर्वं य
शक्ति दक्षिणां दद्यात्। विश्वेदेवा इयं वो दक्षिणा
पितरियं ते दक्षिणा। एवं पितामहप्रपितामहयोः। कर
भोक्तॄन्। प्रति प्रार्थयेत्। दातारो नोऽभिवर्द्धन्तां वेद
संततिरेव च। श्रद्धा च नोमाव्यगमद्बहुदेयं च नोऽस्त्वि
ति ॥ ततो भोक्तारः। दातारो वोऽभिवर्द्धन्तां वेदाः संत
तिरेव च। श्रद्धा च वो मा व्यगमद्बहुदेयं च वोऽस्त्वि
प्रतिवदेयुः ॥ ततः कर्त्ता। अन्नञ्च नो बहुभवेदतिथींश्च
लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कं
न ॥ ततो भोक्तारः। अन्नं च वो बहुभवेदतिथींश्च लभ
ध्वं। याचितारश्च वः संतु मा च याचिढ्वं कंचन
एता एवाशिषस्सन्तु इति कर्त्ता। एताः सन्त्वाशिष इ
भोक्तारः। ततः स्वस्ति भवन्तो ब्रुवन्तु। ॐ स्वस्ति
भोक्तारः। ततः कर्त्ता आशिषः प्रतिगृह्य पितृपूर्वं वा
वाज इति विसर्जयेत्। पितृपङ्क्तिमुख्यस्य ब्राह्मणस्याङ्गु
मपसव्येन गृहीत्वा, वाजेवाजेवत वाजिनो नो धन
विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृ

यात पथिभिर्देवयानैः ॥ इत्येतया पितृपूर्वं पितृ
ज्य, सव्येन विश्वान् देवान् विसृज्य सर्वानुत्थ
ततः सर्वे देवविप्राः पादप्रक्षालनदेशे प्राङ्मुखाः
यश्चोदङ्मुखास्तिष्ठेयुः। ततः कर्त्ता जलपात्रं गृहीत
ह्मणानां परितो जलधारां प्रादक्षिण्येन दद्यात् आम
स्येति। आमा वाजस्य प्रसवो जगम्यादेवे द्यावापृ
विश्वरूपे। आमागन्तां पितरा मातरा चामासोमो
तत्वेन गम्यात् ॥ अथ सीमान्तमनुव्रज्य प्रदक्षिणं कृ
ब्राह्मणानभिवाद्य, वामदेव्यंगीत्वा, गृहं प्रविशेत्। वा
व्यसामप्रकाशः। काऽ५या। नश्चा३इत्रा३आभुवात्।
तीसदावृधःस। खा। औ३होहाइ। कया२३शचाइ।
हो३। हुम्मा२। वा२र्तो३ऽ५हाइ ॥१॥ काऽ५स्त्वा। सत्यो
मा३दानाम्। मा। हिष्ठोमात्सादन्ध। सा। औ३होहाइ
दृढा२३चिदा। रुजोहो३। हुम्मा२। वाऽ२सो३ऽ५हायि ॥२
आऽ५भी। पुणा३ःसा३खीनाम्। आ। विताजरायित्
णाम्। औ२३होहायि। शता२३म्भवा। सियोहो३।
हुम्मा२। ताऽ२यो३ऽ५हायि ॥ ३ ॥

अथ मातुः सपिण्डीकरणे मिताक्षरायाम्। "अपु-
त्रायां प्रमीतायां भर्त्ता स्वमात्रैव सपिण्डीं कुर्यात्। अन्वा-
रोहे पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात्। आसु-

दिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव कुर्य्यात्।
ह्मादिविवाहोत्पन्नः पित्रा, मातामहेन, पितामह्या वा,
कल्पेन कुर्य्यात्। अत्रापि नियतो वंशसमाचारस्तदानीं
व कुर्य्यात्"। कर्मप्रदीपे तु-"मातुः सपिण्डीकरणं
तामह्या सहोदितम्। यथोक्तेनैव कल्पेन पुत्रिकाया न
सुतः" ॥ इति सपिण्डीकरणप्रयोगः ॥

अथस्मार्त्ताग्निमतो दाहविधिरुच्यते । अथ मुमूर्षुं
होमासमर्थं पुत्रादिरग्निसमीपे शाययेत्। यदि शुक्ल-
हुतायां सायमाहुत्यां मरणशङ्का स्यात्, तदैवागामिप्रा-
मं कुर्यात्। यदि कृष्णपक्षे सायमाहुतेः परं मरण-
स्यात्तदैव दर्शपर्य्यन्तमवशिष्टसायमाहुतीः प्रातराहु-
परिगणय्य पक्षहोमवत्सायंप्रातराहुतीस्तन्त्रेण सा-
कुर्य्यात्। पिण्डपितृयज्ञं विहाय दर्शस्थालीपाकमपि
कुर्य्यात्। पुनर्जीवति चेद्दर्शपिण्डपितृयज्ञस्यानुष्ठानं,
न होमस्थालीपाकयोः। शुक्लपक्षे दिवामरणे सायंहोमो
न। कृष्णपक्षे दिवामरणेऽवशिष्टतिथिसायंप्रातराहुतिद-
र्शस्थालीपाकानुष्ठानं भवत्येव। ततः कर्त्ता प्राक् स्मृति-
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]

त्राणां प्रतिपत्तिः कर्मप्रदीपे। "आज्यपूर्णां दक्षिण स्रुचं मुखे स्थापयेत्। तथाग्रमाज्यपूर्णं स्रुवं नासिकाया पादयोः प्रागग्रामधरारणिं। तथाग्रामुत्तरारणिमुर सव्यपार्श्वे दक्षिणाग्रं शूर्पम्। दक्षिणपार्श्वे दक्षिण चमसम्। ऊरुद्वयमध्ये उलूखलं मुसलमधोमुखं, त चत्रमोविलीकं च स्थापयेत्। लोहमयादीनि पात्राणि ब्राह्मणाय दद्यादप्सु वा प्रक्षिपेत्। ततो दाहविधिस्तत्र मन्त्रः "अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः। अस स्वर्गाय लोकाय स्वाहा" ॥ इति कर्मप्रदीपोक्तमन्त्रे गृह्याग्निं दद्यात्। अत ऊर्ध्वं सपिण्डीकरणान्तं सर्वं समानं निरग्निकवत्॥

अथ श्रौताग्निमतो दाहविधिरुच्यते। शुक्लपक्षे सायमग्निहोत्रात्परं मरणशङ्का चेत्तदैव दक्षिणाग्निमाहवनीयञ्च विहृत्य तदैवागामि प्रातरग्निहोत्रं कुर्यात्। सायमग्निहोत्रात्पूर्वं चेत्तदा सायमग्निहोत्रमागामिप्रातरग्निहोत्रं च तन्त्रेण कुर्यात्। उन्नयनात्पूर्वं होमद्रव्योत्पत्तेः परं यजमानस्य प्राणवियोगे होमद्रव्यं गार्हपत्ये प्रक्षिपेत्। उन्नयनात्परं होमादर्वाक् मृते होमद्रव्यमाहवनीये प्रक्षिपेत्। प्रातःकालपर्यन्तं जीवति चेन्न पुनरग्निहोत्रम्। शुक्लपक्षेऽवशिष्टतिथ्यग्निहोत्रं पूर्णमासेष्टिश्च न भवति। कृष्णपक्षे निशायां प्राणवियोगसंशये पूर्ववत्सायम्प्रातरग्निहोत्रं च हुत्वा, दर्शपर्यन्तावशिष्टतिथिपरिगणनया सायम्प्रातर्होमानामुत्कर्षणं कृत्वा, पक्षहोमविधिना तन्त्रेण सायम्प्रातरग्निहोत्रावदानं कुर्यात्। पिण्डपितृयज्ञं विना

सम्पूर्णां दर्शेष्टिमपि कुर्य्यात्। दर्शेष्टिकरणासम्भवे, श्रौतेन विधिनाऽऽज्यं संस्कृत्य, चतुर्गृहीतेनाज्येन दर्शदेवतापुरोनुवाक्यामनूच्य, तद्देवतायाज्ययाऽऽज्येन प्रधानदेवतां यजेत्। पुनश्चतुर्गृहीतेनाज्येन देवतान्तरं यजेत्। तत्राप्यसम्भवे तत्तद्देवतानाम्ना चतुर्थ्यन्तेनाज्येन पूर्णाहुतिं जुहुयात्। यथाऽसोमयाजिनः। अग्नये स्वाहा। इन्द्राग्निभ्यां स्वाहा॥ सोमयाजिनस्तु। अग्नये स्वाहा। इन्द्राय स्वाहा। इन्द्रस्थाने महेन्द्रो वा॥ दर्शपर्य्यन्तं जीवति चेत्नाग्निहोत्रं न दर्शेष्टिः। किन्तु पिण्डपितृयज्ञमात्रम्। सकलेष्टिपक्षे हविषामुत्पत्तेः परं हविरासादनात्पूर्वं मृते, हविषां गार्हपत्ये प्रक्षेपः। हविरासादनादूर्ध्वं होमात्पूर्वं मृते, हविषामाहवनीये प्रक्षेपः। इष्टिमध्ये यस्मिन् कर्मणि मृतिः तत्कर्मान्तं कृत्वा नोर्द्ध्वं कर्म कुर्य्यात्। आसन्नप्राणवियोगं ज्ञात्वा, वेदिकां गोमयेनोपलिप्य, तत्र कुशादीनास्तीर्य्य, तत्र दक्षिणाशिरसं यजमानमुपवेश्य, वैतरणीगोदानादिकं कारयित्वा, मृतस्याभ्यञ्जनाद्यलंकरणान्तं कर्म निरग्निकवत्कुर्य्यात्। नात्र हिरण्यशकलप्रक्षेपः। ततः पुत्रादिर्गार्हपत्यादग्निमुद्धृत्याहवनीयं दक्षिणाग्निं सभ्यावसथ्यौ च विहरेत्। ततोगार्हपत्यादिनामलेखनेन निन्हितेषु नवीनमृत्पात्रेषु गार्हपत्यमाहवनीयं दक्षिणाग्निं सभ्यावसथ्यौ गृह्याग्निं च निधाय यज्ञपात्राणि पृषदाज्यं दर्भान् तिलान् घृतं सप्त हिरण्यशकलानि पिण्डद्रव्याणि च गृहीत्वाऽग्निपूर्वाः शवमध्याः श्मशानं गच्छेयुः। अर्द्धमार्गे श्मशाने

पिण्डदानं निरग्निकवत्। ततः स्मशाने कुत्रचिच्छुद्धदे गार्हपत्यस्थानं परिकल्प्य तस्मादष्टसु प्रक्रमेष्वाहवनीय स्थानम्। विवृतोयदेशे दक्षिणस्यां दिशि दक्षिणाग्न्याय तनम्। आहवनीयपार्श्वयोः सभ्यावसथ्यस्थाने परिकल्प्य गार्हपत्याहवनीययोर्मध्ये दक्षिणाप्रवणां चितिं पूर्ववत्कुर्यात्। ततो गार्हपत्याद्यायतनेषु सकृत्सकृत्पञ्चभूसंस्कारान् कृत्वा तेष्वग्नीन्यथाक्रमं स्थापयेत्। ततश्चितौ दक्षिणाशिरसं प्रेतं स्थापयेत्। ततः प्रेतस्य मुखादिषु सात्ताग्निपात्राणि साग्निकवत्संस्थाप्य यज्ञियपात्राणि 'लाट्यायन'-सूत्रोक्तविधिना स्थापयेत्। सूत्रम्। "शिरसि कपालानि, इडां दक्षिणाग्रां च, ललाटे प्राशित्रहरणम्, दक्षिणाग्रमग्निहोत्रस्रुवं दक्षिणनासायाम्, तथाग्रमैष्टिकस्रुवं वामनासिकायाम्। ततः सप्तहिरण्यशकलान्यस्मिन्काले मुखादिच्छिद्रेषु प्रक्षिपेत्। यथा–मुखे प्रथमम्, ततो दक्षिणनासिकायाम्, ततो वामनासिकायाम्, ततो दक्षिणनेत्रे, ततो वामनेत्रे, ततो दक्षिणकर्णे, ततो वामकर्णे, तत अग्निहोत्रहवणीं तिरश्चीं प्रागग्रां मुखे, दक्षिणपाणौ जुहूं दक्षिणाग्रां, सव्ये पाणावुपभृतं दक्षिणाग्राम्, उरसि ध्रुवां दक्षिणाग्राम्, उदरे पात्रीम्, उपस्थे कृष्णाजिनम्, सक्थ्नोर्मध्ये शम्यां दृषदुपले च, यान्यनिर्दिष्टस्थानानि तान्यत्रैव स्थापनीयानि"। तानि यथा–अरणिद्वयं चत्रौविली प्रणीता दोहनपात्रशृतावदानान्तर्द्धानपात्रपूर्णपात्रयोक्त्रादीन्येतान्यपि दक्षिणाग्राणि। चत्रं नाम मन्थनदण्डः। ओविली नाम मन्थदण्डस्योपरिभागे यो लोहशङ्कुस्तद्-

रे स्थापनकाष्ठम् । दक्षिणकटिसन्निकृष्टजघनप्रदेश ऊ-
मुलूखलं, तत्रैव मुसलम् । पादयोः शूर्पं दक्षिणाग्रं,
वोक्तानि सर्वाण्यपि यज्ञपात्राणि पृषदाज्यपूरितान्युत्ता-
ानि स्थापयेत् । "दधिमिश्रितं घृतं पृषदाज्यम्" । ततो-
स्मिन्काले सक्थ्नोर्मध्ये सभ्यावसथ्यौ स्थापनीयौ । गृह्या-
ग्नेरपि । ततोऽग्निभ्य उलपराजिनामकब्रहुकुशास्तरणं
कुर्यात् । यथा यजमानस्य शरीरे सर्वेऽग्नयः सङ्गता भवेयुः ।
तदुक्तं लाट्यायनेन । "सर्वेभ्योऽग्निभ्य उलपराजीन्
स्तृणुयुः यथाऽस्मिन्नग्नयः समवेष्यन्तीति" ॥ ततो गा-
र्हपत्यादीनाम्मध्ये यस्य प्रथमतो ज्वलनं तदनुसारेण य-
जमानस्य फलविशेषमाह । "आहवनीयाच्चेत्प्रथममियात्
ब्रह्मलोकमेष्यतीति विद्यात्, गार्हपत्याद्देवलोकं, दक्षिणा-
ग्नेः पितृलोकम्" । सूत्रं । "क्लृप्तेषु यज्ञपात्रेषु त्रिच्छन्दो-
गः परिगायेत् नाकंसुपर्णमिति, धूम उदिते त्वेषस्ते धूम
ऋण्वतीति, प्रज्वलिते ऽग्ने मृड महां२असि, इत्येतयोर-
न्यतरेण । अत्रायं भावः । यज्ञपात्रस्थापनानन्तरं नाकंसु-
पर्णमितिसामत्रिर्गानं प्राचीनावीती तिष्ठन्कुर्यात् कर्त्ता-
ऽन्यो वा । धूमे जाते, त्वेषस्तेधूम ऋण्वतीत्यस्य सामत्रि-
र्गानम् । अग्ने मृड महां२असीतिसामद्वयमध्ये ऽन्य-
तरस्य त्रिर्गानम् । सामप्रकारो यथा । आस्वाम् । अवा-
यम् । ओ३होऽ२यि । आरयि । उ२ । नाकेंसुपर्णमुपयत्पत-
न्तम् । यत्नन्तम् । ओ३होऽ२यि आरयि । ऊ२ । आस्वान् ।

१२२१ २ ऽ २ १ - - १ २ २ २
अयायम् । औ३हो३यि आ२यि । ऊ२ । हृदावेनान्तो अ
३ २ १ ३२ ऽ २ १ - -
चाक्षतत्वा । क्षतत्वौ३ । हो३यि । आ२यि । ऊ२ । अ
१ ३२२१ २ ऽ २ १ - - १
याम् । अयायम् । औ३हो३यि । आ२यि । ऊ२ । हिर
३२२१ ३२२१ २ ऽ २ १ -
पाक्षंवरुणास्यदूताम् । स्यदूतम् । औ३हो३यि । आ२यि
- १ - १ ३२२१ २ ऽ २ १ -
ऊ२ । आ२याम् । अयायम् । औ३हो३यि । आ२यि । ऊ
१ २ ३२१ ३२१ २ ऽ १
यमस्ययोनौशकुनाम् भुरण्यूम् । भुरण्युं । औ३हो३यि
१ - - १ - १ ३२२१ २ ऽ २ १ -
आ२यि ऊ२ । आ२याम् । अयायम् । औ३हो३यि । आ
१ ^ २२ २ १ २
यि । ऊ२ । वाहा३१उवा२३ । ए३ । दिवम् । २ । ए३ ।
१ २ १ १ १ २२ १ ४२ ५ २
दिवा३४५म् ॥ १ ॥ त्वेषास्ते२३धूमऋण्वतिहाउ । दिवि-
^ १ २ ४२२ ५ २ १ २
संच्छूक्रा२आताता२ः । सूरोनहीहाउ । द्युतातूवा३म् ।
४ २ ५ २ १२ २^ १ ५
कृपापवाहाउ । करोचा२३सा२४३यि । ऊ२३४५ई । डा ।
१ ७ ^ ३२ २ ५ १
गौ ॥ २ ॥ अग्नायिमृडा२ । महा२आ२३४सी । अयआ-
२^ ३२^२ ५ १२ २ ४
दा२यि । वयुजा२३४नाम् । इयेथवा२३ । हिरा३सा५दा-
३४२ ३४३२ ४ ५ ३२ २ ४ ५ २
६५६म् ॥ ३ ॥ अग्नेमृडमहा२असि । ओहा२ओहा । अ-
४३२४२ ३४५ ३२२ ४ ५ २१२ २ ३२ ४
यआदेवयुञ्जनम् । ओहा२ओहा । इयेथा२३व । हिरा२सा-

५।३।६५६म् ॥ ४ ॥ ततो गार्हपत्ये आज्यस्थालीमधिश्रि-
त्याज्यं विलाप्योद्वास्य पवित्राभ्यामुत्पूयावेक्षते। ततः प्रे-
तोपरि पूर्वस्थापितामग्निहोत्रहवणीमग्निहोत्रस्रुवञ्च गृही-
ना संमृज्य, स्रुवेणाग्निहोत्रहवण्यां सकृदाज्यं गृहीत्वा,
प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य प्रज्वलि-
ऽग्नौ प्रेतमुखे समिधं प्रक्षिप्यास्मात्त्वमधीतिमन्त्रेणा-
ं जुहुयात। मन्त्रे ऽसावित्यस्य स्थाने प्रेतस्य प्रथमान्तं
मोच्चारणीयम्। मन्त्रः—अस्मात्त्वमधिजातोऽसि त्वदयं
यतां पुनः। असौ स्वर्गाय लोकाय स्वाहा॥ ततोऽग्नि-
त्रहवणीं प्रागग्रां तिरश्चीं पृषदाज्ययुक्तां मुखे विन्यस्य
क्षिणनासायामग्निहोत्रस्रुवं पृषदाज्ययुक्तं दक्षिणाग्रं वि-
नेत्। ततो धूमे उदिते उक्तसामगानम्। प्रज्वलिते
क्तसामगानम्। ततः सप्तकाष्ठग्रहणं सप्तप्रदक्षिणा-
कं न निरग्निकवत्कुर्यात्। इति श्रौताग्निमतो गोभि-
त्रिणो दाहविधिः॥

अथाहिताग्निविषये ऽग्निनिर्णयः। यदि यजमानप-
मध्ये यजमानः पूर्वं प्रमीयेत तं सर्वैरग्निभिः संस्कु-
त्। पत्नीं निर्मन्थ्येन। यदि पत्नी पूर्वं म्रियेत, यजमानः
र्वाहिच्छुरन्येरपत्नीमग्निभिः पात्रैश्च दाहयित्वा शीघ्र-
मुद्वाह्याग्निमादध्यात्। केनापि निमित्तेन विवाहा-
ये पत्नीं निर्मन्थ्येन दाहयित्वा यावज्जीवमग्निहोत्रं
ात्। अन्यान्यपि दर्शपूर्णमासादीनि नित्यानि कु-
ण तन्निमित्तप्रायश्चित्तानि न कुर्यात्। यदि पत्नी-

मग्निभिः पात्रैश्च दाहयित्वा स्वयं निरग्निको भवे प्रायश्चिती स्यात्। स्पष्टोऽयमर्थः कर्मप्रदीपे–"दाहयि ऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम्। पात्रैश्चाथाग्नि ध्यात्कृतदारोऽविलंबितः ॥ मृतायामपि भार्यायां वैदि ग्नीन्नहि त्यजेत्। उपाधिनाऽपि तत्कर्म यावज्जीवं सम रेत्" ॥ गृह्याग्निमतः पत्नीदाहे अस्मात्त्वमधिजातेति मन्त्रपाठो ऽन्यत्सर्वं साग्निकवत्कुर्यात्॥२॥ "श्रौताग्निम पत्नीदाहे ऊहरहितेनास्मात्त्वमधिजात इति मन्त्रेण दाह इति कर्कोपाध्यायः ॥ इत्याहिताग्निविषयेऽग्निनिर्णयः

अथ त्रिरात्राशौचवतः कृत्यविधिः। प्रथमदिने पि ण्डत्रयं, द्वितीये चतुष्टयं, तृतीये पिण्डत्रयम्। अथवा प्र थमे एकः, द्वितीये चत्वारः, तृतीये पञ्च, पिण्डा देयाः सद्यः शौचे एकस्मिन्दिने दशपिण्डा देयाः। पक्वान्नास म्भवे शालियवपिष्टान्यतरेण पिण्डा देयाः ॥

अथ रजस्वलाया मरणे दाहविधिरुच्यते। "रजस्व लायाः प्रेतायास्संस्कारादीनि नाचरेत्। ऊर्ध्वं त्रिरात्रा त्स्नातां तां शवधर्म्मेण दाहयेत्" ॥ अतो रजस्वलायाः प्रेतायास्त्र्यहमध्ये मरणानन्तरं रजोरूपं मलं प्रक्षाल्य, स्नापयित्वा, काष्ठवद्दग्ध्वा त्र्यहोर्द्ध्वमस्थीनि विधिना दहेत्। सङ्कटे तु त्र्यहमध्ये मरणानन्तरं प्रायश्चित्तपूर्वकं विधि वद्दहनमाह मदनरत्ने स्मृत्यन्तरे च। "उदक्या सूतिका वापि मृता स्याद्यदि तां तदा। अशौचे शमतिक्रान्ते दा हयेदन्तरा यदि ॥ उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्र-

तः । आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥ पञ्च-
मानानुवाकेन यदन्तीति च सप्तभिः ॥ ततो यज्ञपवित्रेण
गोमूत्रेणाथ वा द्विजाः । स्नापयित्वाऽन्यवसनेनाच्छाद्य
शवधर्मतः । दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा ॥
रप्रकारिकायाम् । "अन्तरिक्षमृता ये च वन्हावप्सुप्रमा-
तः । उदक्या सूतिका नारी चरेच्चान्द्रायणत्रयम्" ॥
ताक्षरायां तु,—"पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां र-
जस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्" ॥
देशकालौ सङ्कीर्त्यामुकगोत्रायाः प्रेताया रजस्वलाया म-
रणदोषपरिहारार्थमौर्ध्वदैहिककर्मयोग्यतासिद्ध्यर्थं चान्द्रा-
यणत्रयप्रतिनिधिप्रायश्चित्तपूर्वकमुद्धृतोदकेनाष्टोत्तरशत-
संख्याकस्नानानि कारयिष्ये इति सङ्कल्प्य, चान्द्रायणत्र-
यप्रतिनिधिगोदानानि कृत्वा, तामुद्धृतोदकेन पञ्चगव्येन
शुद्धोदकेन चाष्टोत्तरशतकृत्वः स्नापयित्वा, मन्त्रैः स्नापये-
व । छन्दोगानां तु उपास्मै गायतानर इत्यादिभिः पाव-
मानीभिः त्वमग्निरित्यादिऋग्द्वयेनापोहिष्ठेत्यादिभिस्तिसृ-
भिः कयानश्चित्र इत्यादिभिस्तिसृभिश्च स्नापयित्वा, पू-
र्वतवस्त्रं परित्यज्यान्यवाससा परिच्छाद्य, विधिना द-
व । यथा यथा । इति रजस्वलामरणे दाहविधिः ॥

अथ सूतिकामरणे दाहविधिः ॥ रजस्वलावत्सूति-
[illegible]रा अपि मरणानन्तरं [illegible] कालान्तरेष्वा
[illegible]र्याणि विविद्धदेयु । अन्ये तु [illegible] । तत्र [illegible]
[illegible] "उदक्यासूतिकामृतौ [illegible] चान्द्रायणत्रय" ॥

मिताक्षरायां तु–"सूतिकायाम्मृतायां तु कथं कुर्वन्ति याज्ञिकाः। कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेत्ततः॥ पुण्यामिरभिमन्त्र्यापः वाचा शुद्धिं लभेत्ततः। तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि॥ अब्लिङ्गाभिर्मन्त्रिताभिर्वामदेव्याभिरेव च। अन्यैश्च वारुणैर्मन्त्रैः संस्नाप्य विधिपूर्वकम्"॥ अथ प्रयोगः। देशकालौ सङ्कीर्त्य, गोत्राया अमुकप्रेतायाः सूतिकाया मरणसञ्जातदोषनिरासद्वारौर्ध्वदेहिकसंस्कारकरणयोग्यतासिद्ध्यर्थं चान्द्रायणत्रयप्रतिनिधिप्रायश्चित्तपूर्वकमुद्धृतोदकेनाष्टोत्तरशतस्नानादिकं कारयिष्ये इति सङ्कल्प्य, पूर्ववत्प्रायश्चित्तादिकं कृत्वा, कुम्भे सलिलमादाय, तत्र पञ्चगव्यं निक्षिप्यापोहिष्ठेत्यादिभिस्तिसृभिः, कयानश्चित्रइत्यादिभिस्तिसृभिः, तोन्विन्द्रमित्यादिभिस्तिसृभिः, प्रमित्राय प्रार्यम्णे यदाकदा च मीढुषे घृतवती भुवनानामित्यादिभिर्वारुणीभिर्ऋग्भिरभिमन्त्र्य, ताभिः स्नापयित्वाऽन्यवाससा परिच्छाद्य विधिवद्दहेत्। मन्त्रा यथा। इति सूतिकामरणे दाहविधिः॥

अथ गर्भिणीमरणे दाहविधिः। तत्र प्रायश्चित्तादिकं पूर्ववत्। विशेषस्तूच्यते। यज्ञकारिकायाम्–"यदा गर्भवती नारी सशल्यं संस्थिता भवेत्। कुक्षिं भित्त्वा ततश्शल्यं निर्हरेद्यदि जीवति॥ प्रमीतं निखनेत्तं तु प्रायश्चित्तं ततः परम्। सा त्रयस्त्रिंशता कृच्छ्रैश्शुद्ध्यते शल्य-

॥ सगर्भदहने तस्या वर्णजं वधपातकम्। प्राय-

त्त तु शुद्ध्यन्ति पापकारिणः"॥ उक्तं चि-

र्थं, गर्भस्थं शिशुं वहिर्निष्काश्य, पूर्ववत्प्रायश्चित्तादि-
: विधिवद्दहेत्। शल्यदोपनिवृत्त्यर्थं त्रयस्त्रिंशत्कृच्छ्राणि
म्नायेन करिष्ये इति सङ्कल्पः। शिशौ जीवति सति
ममानयेत्। मृतश्चेन्निखनेत्। इति गर्भिणीमरणे
विधिः॥

अथ धनिष्ठादिनक्षत्रपञ्चके मृतस्य दाहविधिरुच्यते।
मदनरत्ने गारुडे–"आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्र-
कम्। रेवत्यन्तं सदा दूष्यमशुभं दाहकर्मणि॥ शवस्य
मीपे तु क्षेप्तव्याः पुत्तलास्तदा। दर्भमय्यस्तु चत्वार
मन्त्राभिमन्त्रिताः॥ ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्त-
सह। सूतकान्ते ततः पुत्रैः कार्य्यं शान्तिकपौष्टि-
"॥ ग्रन्थान्तरे तु,–"अथवा तद्दिने कार्य्यो दाहस्तु
पूर्वकः। धनिष्ठापञ्चके जीवो मृतो यदि कथञ्च न॥
करे याम्यभे वा कुलजान्मारयेद्ध्रुवम्॥ तत्रारिष्टनि-
र्थं विधानं समुदीर्य्यते। दर्भाणां प्रतिमाः कार्य्याः
र्णासूत्रवेष्टिताः॥ यवपिष्टेनानुलिप्तास्ताभिः सह
दहेत्। प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रे-
पञ्चमस्तु नामान्येतानि च क्रमात्"॥ प्रतिमानां
विशेषेषु स्थापनं, तासु तत्तन्नामभिराज्याहुतिं हुत्वा,
तासु प्रत्येकं वक्ष्यमाणमन्त्राभ्यामाज्यं जुहुयात्। एतत्सर्वं
निष्ठापञ्चकमृते पञ्चर-
जुहुयाद्दहनपामिति॥
...धः स्मृतः। इतरं निख-

नेदेव जले वा प्रतिपादयेत्" ॥ तत्रैव ॥ "कनकं हीर
नीलं पद्मरागश्च मौक्तिकम् । पञ्चरत्नमिदं प्रोक्तमृषि
पूर्वदर्शिभिः ॥ रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धमेव व
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः" ॥ अ
प्रयोगः ॥ कर्त्ताऽऽचम्य, प्राणानायम्य, देशकालौ सङ्की
र्त्य, प्राचीनावीती, गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्र
ञ्चकमध्ये मरणसंसूचितासद्देशारिष्टपरिहारार्थं पञ्चकम
णविधिं करिष्ये इति सङ्कल्प्य, दर्भमय्यः पञ्च प्रतिम
कृत्वा, ऊर्णासूत्रेण वेष्टयित्वा, यवपिष्टेनानुलेपनं कृत्व
शवसमीपे दक्षिणापवर्गं संस्थाप्य, क्रमेण नामानि नि
येत् । प्रेतवाहः, प्रेतसखः, प्रेतपः, प्रेतभूमिपः, प्रेतहर्त्त
चेति । ततो नक्षत्रमन्त्रैरभिमन्त्रयेत् । छन्दोगानां नक्षत्र
मन्त्राः । इदं वसो सुतमन्धस इति वसूनाम् । यदा कद
व मीढुष इति वरुणस्य । ईशान इमा भुवनानि ईयसं
इत्यजैकपदः । अभित्वा शूरनोनुम इत्यहिर्बुध्न्यस्य । शुक्र
ते अन्यादिति पूष्णः । ततो गन्धपुष्पादिभिः प्रतिमा
सम्पूज्य दाहसमये प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृती
यां वामकुक्षौ, चतुर्थीं नाभौ, पञ्चमीं पादयोर्विन्यसेत् ।
ततस्तूष्णीमाज्यं संस्कृत्य प्रतिमासु निर्देशक्रमेण पूर्वोक्त-
नाममन्त्रैराज्याहुतीर्जुहुयात् । तत्र मन्त्राः । प्रेतवाहाय
स्वाहा । प्रेतसखाय स्वाहा । प्रेतपाय स्वाहा । प्रेतभूमि-
पाय स्वाहा । प्रेतहर्त्रे स्वाहा ॥ तत उदकपात्रेण परितो
जलधारां दत्वा, प्रेतमुखे पूर्वोक्तानि पञ्चरत्नानि निक्षि-

ण, नाकेसुपर्णमिति त्र्यम्बकमिति मन्त्राभ्यां प्रत्येकं शतमास्त्राऽऽज्याहुतीर्जुहुयात्। ततस्तदग्नावाज्याहुतीत्रयं कुर्यात्। वह् वपां जातवेद इति प्रथमा। इदं जातवेदसे न मम। जातवेदो वपया गच्छ देवानिति द्वितीया। इदं जातवेदसे न मम। यत्कुसीदमप्रदत्तमितितृतीया। इदं अग्नये न मम। ततो यथाविधि प्रतिमायुक्तं प्रेतं दहेत्। इति धनिष्ठादिनक्षत्रपञ्चकमरणे दाहविधिः॥

अथ धनिष्ठापञ्चकशान्तिः। धनिष्ठापञ्चकमृतस्य दाहविधिमुक्त्वा तच्छान्तिमाह स्मृत्यन्तरे। "सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकं। कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने॥ ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः। माष-मुद्ग-यव-व्रीहित्रियंग्वादीन्प्रयच्छति॥ स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम्। गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये"॥ मदनरत्ने-"एकादशपलं कांस्यं तदर्द्धं वा तदर्द्धकम्। नवपल् त्रिपलं वाऽपि दद्याद्विप्राय शक्तितः"॥ तथाऽन्यत्र। "स्वगृह्योक्तविधानेन वह्नेः संस्थापनं ततः। अन्वाधानं निर्वपणं देवतानां तथाहुतिः॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च॥ औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः॥ विधिना तर्पणं कृत्वा एकैकमाहुतिं हुनेत्। कृष्णां गां कृष्णवत्सां च [illegible]॥ [illegible] [illegible] प्रीतो भवतु मे यमः" इति॥ अथ [illegible]। [illegible], एकादशाहे [illegible] [illegible]

धृत्वाऽऽचम्य, प्राङ्मुख उपविश्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, प्राचीनावीती, गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिवृत्त्यर्थं धनिष्ठापञ्चकशान्तिकर्म करिष्ये इतिसङ्कल्प्य, उपवीती, आचार्यं ब्रह्माणं पञ्चर्त्विजश्च वृत्त्वा, तान् यथाविधि वस्त्रालङ्कारदक्षिणादानादिभिः सम्पूजयेत्। तत आचार्यः शुद्धे सुसमे प्रदेशे स्थण्डिले यथाविधि परिसमूहनादि कृत्वा, वरदनामानमग्निं प्रतिष्ठापयेत्। अत्र चरुतन्त्रम्। अस्मिन्कर्मणि भूजपपरिसमूहनप्रपदवैरूपाक्षजपा नियताः, काम्यत्वात्। प्रकृतिवत्पात्राण्यासाद्य होमार्थं तिल-यव-व्रीहिसमिदादीनासादयेत्। निर्वापकाले, वसुभ्यस्त्वा जुष्टं निर्वपामि। वरुणाय त्वा०। अजैकपदे त्वा०। अहये बुध्न्याय त्वा०। पूष्णे त्वा०। तण्डुलानोप्य अग्नौ चरुस्थालीं स्थापयेत्। स्थण्डिलस्यैशानदिग्भागे स्थण्डिलान्तरे नूतनवस्त्रमास्तीर्य्य, अक्षतैश्चतुरस्रं कृत्वोत्तरापवर्गतया धनिष्ठादीनि पञ्चनक्षत्राणि स्थापयेत्। तद्यथा। धनिष्ठां स्थापयामि०। शतभिषजं०। पूर्वाभाद्रपदं०। उत्तराभाद्रपदं०। रेवतीं स्थापयामि॥ तत उत्तरापवर्गतया यथाविधि पञ्चकलशान् संस्थाप्य, तेषु प्रत्येकमेकैकां प्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य, तासु धनिष्ठादिदेवता आवाहयेत्। यथा। ॐ इदं वसो सुतमन्धः पिबासुपूर्णमुदरं। अनाभयिन्नरिमाते॥ १॥ वसूनावाहयामि। वसव

इहागच्छत इह तिष्ठत। ततो द्वितीयकलशे, य
न्मीदुपस्तोताजरेतमर्त्यः। आदित्युंदेत वरुणं वि
धर्तारं विव्रतानाम् ॥ २ ॥ वरुणमावाहयामीत्यादि
यकलशे, ईशान इमा भुवनानि ईयसे युजान इं
सुपर्ण्यः। तास्ते क्षरंतु मधुमद्घृतं पयस्तव
तिष्ठंतु कृष्टयः ॥ ३॥ अजैकपादमावाहयामीत्या
र्थकलशे, अभित्वा शूर नोनुमो दुग्धा इव धेनव
नमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ४

वाहयामीत्यादि। पञ्चमकलशे, शुक्रंते अ
विषुरूपे अहनी द्यौरिवासि। विश्वा हि म
न् भद्रा ते पूषन्निह रातिरस्तु ॥ ५
मीत्यादि। छन्दोगानामेते मन्त्राः
याया। ततः प्राणप्रतिष्ठामन्त्रैः प्र
न्सैर्वस्त्रादिभिरुपचारैः सम्पूज्य
शतं तदर्द्धं वा ऽष्टाविंशतिवारं
न्तं प्रकृतिकलश

धृत्वाऽऽचम्य, प्राङ्मुख उपविश्य, प्राणानायम्य, देश
सङ्कीर्त्य, प्राचीनावीती, गोत्रस्यामुकप्रेतस्य धनिष्ठा
क्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिवृत्त्यर्थं धनिष्ठापञ्च
शान्तिकर्म करिष्ये इतिसङ्कल्प्य, उपवीती, आचा
ब्रह्माणं पञ्चर्त्विजश्च वृत्वा, तान् यथाविधि वस्त्रालङ्कार
क्षिणादानादिभिः सम्पूजयेत् । तत आचार्यः शुद्धे सुसम
प्रदेशे स्थण्डिले यथाविधि परिसमूहनादि कृत्वा, वरद-
नामानमग्निं प्रतिष्ठापयेत् । अत्र चरुतन्त्रम् । अस्मिन्कर्म-
णि भूजपपरिसमूहनप्रपदवैरूपाक्षजपा नियताः, काम्य-
त्वात् । प्रकृतिवत्पात्राण्यासाद्य होमार्थं तिल-यव-व्रीहि-
समिदादीनासादयेत् । निर्वापकाले, वसुभ्यस्त्वा जु
निर्वपामि । वरुणाय त्वा० । अजैकपदे त्वा० । अहि
र्बुध्न्याय त्वा० । पूष्णे त्वा० । तण्डुलानोप्य अग्नौ चरु-
स्थालीं स्थापयेत् । स्थण्डिलस्यैशानदिग्भागे स्थण्डिला-
न्तरे नूतनवस्त्रमास्तीर्य्य, अक्षतैश्चतुरस्रं कृत्वोत्तरापवर्ग-
तया धनिष्ठादीनि पञ्चनक्षत्राणि स्थापयेत् । तद्यथा । ध-
निष्ठां स्थापयामि० । शतभिषजं० । पूर्वाभाद्रपदं० । उत्त-
राभाद्रपदं० । रेवतीं स्थापयामि ॥ तत उत्तरापवर्गतया
यथाविधि पञ्चकलशान् संस्थाप्य, तेषु प्रत्येकमेकैकां प्रति-
मामग्न्युत्तारणपूर्वकं संस्थाप्य, तासु धनिष्ठादिदेवता आ-
हयेत् । यथा । ॐ इदं वसो सुतमन्धः पिबासुपूर्णमु-
। अनाभयिन्नरिमाते ॥ १ ॥ वसूनावाहयामि । वसव

इहागच्छत इह तिष्ठत । ततो द्वितीयकलशे, यदाकदाचमीढुषेस्तोताजरेतमर्त्यः । आदिद्वंदेत वरुणं विपागिरा धर्तारं विव्रतानाम् ॥ २ ॥ वरुणमावाहयामीत्यादि । तृतीयकलशे, ईशान इमा भुवनानि ईयसे युजान इंदोहरितः सुपर्ण्यः । तास्ते क्षरंतु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठंतु कृष्टयः ॥ ३ ॥ अजैकपादमावाहयामीत्यादि । चतुर्थकलशे, अभित्वा शूर नोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ४ ॥ अहिर्बुध्न्यमावाहयामीत्यादि । पञ्चमकलशे, शुक्रंते अन्यद्यजतं ते अन्यद्विषुरुपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥ ५ ॥ पूषाणमावाहयामीत्यादि । छन्दोगानामेते मन्त्राः । अन्येषां स्वशाखोक्ता ग्राह्या । ततः प्राणप्रतिष्ठामन्त्रैः प्राणप्रतिष्ठां कृत्वा, तत्तन्मन्त्रैर्ध्यानादीन्सर्वोपचारैः सम्पूज्य, तत्तन्मन्त्रानष्टोत्तरशतं तदर्द्धं वा ऽष्टाविंशतिवारं वा जपेत् । श्रृताभिघारणाद्याज्यभागान्तं प्रकृतिवत्कृत्वा ऽवदानधर्मेण चतुरवत्तं पञ्चावत्तं वा चरुमवदाय, वसुभ्यः स्वाहा ।

इदं वसुभ्यः न मम । वरुणाय स्वाहा । इदं व० न मम अजैकपदे स्वाहा । इदं अ० न मम । अहये बुध्न्याय स्वाहा इदं अ० न मम । पूष्णे स्वाहा । इदं पू० न मम ॥ इति चर्वाहुतिं कृत्वा वस्वादिमन्त्रैरेकैकस्याष्टावष्टावाज्याहुतीर्जुहुयात् । ततो दधिमध्वाज्यलिप्ताः समिध एकैकस्याष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवारं वा वस्वादिमन्त्रैर्यथाशक्ति होतव्याः । ततः शान्त्यर्थं यमादिनाममन्त्रैस्तिलादिभिर्होमः । यमाय स्वाहा । धर्मराजाय स्वाहा । मृत्यवे स्वाहा । अन्तकाय स्वाहा । वैवस्वताय स्वाहा । कालाय स्वाहा । सर्वभूतक्षयाय स्वाहा । औदुम्बराय स्वाहा । दध्नाय स्वाहा । नीलाय स्वाहा । परमेष्ठिने स्वाहा । वृकोदराय स्वाहा । चित्राय स्वाहा । चित्रगुप्ताय स्वाहा । सर्वत्र तत्तनाम्ना त्यागो यमायेति वा । एतैर्नामभिर्यथाशक्त्या होमः । ततः स्विष्टकृतं हुत्वा कलशोदकेनाभिषेकः । तत उक्तप्रमाणं कांस्यपात्रं तैलेन पूरयित्वा, तत्रमुखं वीक्ष्य, हिरण्यताम्बूलादिसहितमिदं कांस्यपात्रं सूर्यदेवताकं प्राचीनावीती गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृतिसंसूचितवंशारिष्टनिरसनार्थं तुभ्यमहं सम्प्रददे न मम इति स्यात् । ततो माषमुद्ग-यव-व्रीहि-प्रियंग्वादिधान्यानि प्रजापतिदैवतानि गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृत्याद्युक्त्वा ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये नानागोत्रेभ्यो नानानामभ्यो ब्राह्मणेभ्यः सम्प्रददे न मम । ततस्तिलदान-स्वर्णदान-गोदान-भूदानादिकं स्वकीयवित्तषष्ठांशेन कुर्य्यात् । ततः कलशानां

दानम्। इमं वसुकलशं सजलं सवस्त्रं सहिरण्यं सफलममुकगोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थं प्राचीनावीती गोत्राय शर्मणे ब्राह्मणाय सम्प्रददे न मम। अनेन कलशदानेन वसवः प्रीयन्ताम्। प्रीयन्तां वसव इति प्रतिगृहीता वदेत्। एवं वरुणादिकलशचतुष्टयं दद्यात्। वरुणः प्रीयताम्। अजैकपात् प्री०। अहिर्बुध्न्यः प्री०। पूषा प्रीयताम्। ततो व्याहृतिहोमादिवामदेव्यगानान्तं प्रकृतिवत्कुर्य्यात्। ततो गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थमनुष्ठितस्य शान्तिकर्मणो न्यूनातिरिक्तविधिसंपूर्णतासिद्धिद्वारा यथोक्तफलावाप्त्यर्थं भूरिदक्षिणाब्राह्मणभोजनादिकं करिष्ये इतिसङ्कल्प्य तथा कुर्य्यात्। ततः कर्म ब्रह्मार्पणं कुर्यात्। इति धनिष्ठापञ्चकमरणशान्तिप्रयोगः॥

अथ नारायणबलिप्रयोगः। तत्र बोधायनः "नारायणबलिं व्याख्यास्यामः अभिशस्तसुरापा आत्मत्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि त्रीणि वा वारिमरणं यत्र यस्य तत्रतत्र कुर्वीत"। शौनकः। "शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम्। चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषादभिः। देशान्तरमृतानाञ्च मृतानां चैव साधनैः। जीवश्राद्धकृतानाञ्च कनिष्ठानां तथैव च॥ यतीनां योगिनां पुंसामन्येषां मोक्षकाङ्क्षिणाम्। पुण्यापापक्षयार्थाय द्वादशेऽहनि

इदं वसुभ्यः न मम । वरुणाय स्वाहा । इदं व० न मम । अजैकपदे स्वाहा । इदं अ० न मम । अहये बुध्न्याय स्वाहा । इदं अ० न मम । पूष्णे स्वाहा । इदं पू० न मम ॥ इति चर्वाहुतिं कृत्वा वस्वादिमन्त्रैरेकैकस्याष्टावष्टावाज्याहुतीर्जुहुयात् । ततो दधिमध्वाज्यलिप्ताः समिध एकैकस्याष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवारं वा वस्वादिमन्त्रैर्यथाशक्ति होतव्याः । ततः शान्त्यर्थं यमादिनाममन्त्रैस्तिलादिभिर्होमः । यमाय स्वाहा । धर्मराजाय स्वाहा । मृत्यवे स्वाहा । अन्तकाय स्वाहा । वैवस्वताय स्वाहा । कालाय स्वाहा । सर्वभूतक्षयाय स्वाहा । औदुम्बराय स्वाहा । दध्नाय स्वाहा । नीलाय स्वाहा । परमेष्ठिने स्वाहा । वृकोदराय स्वाहा । चित्राय स्वाहा । चित्रगुप्ताय स्वाहा । सर्वत्र तत्तन्नाम्ना त्यागो यमायेति वा । एतैर्नामभिर्यथाशक्त्या होमः । ततः स्विष्टकृतं हुत्वा कलशोदकेनाभिषेकः । तत उक्तप्रमाणं कांस्यपात्रं तैलेन पूरयित्वा, तत्रमुखं वीक्ष्य, हिरण्यताम्बूलादिसहितमिदं कांस्यपात्रं सूर्यदेवताकं प्राचीनावीती गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृतिसंसूचितवंशारिष्टनिरसनार्थं तुभ्यमहं सम्प्रददे न मम इति दद्यात् । ततो माष-मुद्ग-यव-व्रीहि-प्रियंग्वादिधान्यानि प्रजापतिदैवतानि गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृत्याद्युक्त्वा ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये नानागोत्रेभ्यो नानानामभ्यो ब्राह्मणेभ्यः सम्प्रददे न मम । ततस्तिलदान-स्वर्णदान-गोदान-भूदानादिकं स्वकीयवित्तषष्ठांशेन कुर्यात् । ततः कलशानां

दानम् । इमं वसुकलशं सजलं सवस्त्रं सहिरण्यं सफलममुकगोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थं प्राचीनावीती गोत्राय शर्मणे ब्राह्मणाय सम्प्रददे न मम । अनेन कलशदानेन वसवः प्रीयन्ताम् । प्रीयन्तां वसव इति प्रतिगृहीता वदेत् । एवं वरुणादिकलशचतुष्टयं दद्यात् । वरुणः प्रीयताम् । अजैकपात् प्री० । अहिर्बुध्न्यः प्री० । पूषा प्रीयताम् । ततो व्याहृतिहोमादिवामदेव्यगानान्तं प्रकृतिवत्कुर्यात् । ततो गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थमनुष्ठितस्य शान्तिकर्मणो न्यूनातिरिक्तविधिसंपूर्णतासिद्धिद्वारा यथोक्तफलावाप्त्यर्थं भूरिदक्षिणाब्राह्मणभोजनादिकं करिष्ये इतिसङ्कल्प्य तथा कुर्यात् । ततः कर्म ब्रह्मार्पणं कुर्यात् । इति धनिष्ठापञ्चकमरणशान्तिप्रयोगः ॥

अथ नारायणबलिप्रयोगः । तत्र बोधायनः "नारायणबलिं व्याख्यास्यामः अभिशस्तसुरापा आत्मत्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि त्रीणि वा वारिमरणं यत्र यस्य तत्रतत्र कुर्वीत" । शौनकः । "शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् । चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः । देशान्तरमृतानाञ्च मृतानां चैव साधनैः । जीवच्छ्राद्धमृतानाञ्च कनिष्ठानां तथैव च ॥ यतीनां योगिनां पुंसामन्येषां मोक्षकांक्षिणाम् । पुण्यायाघक्षयार्थाय द्वादशेऽहनि

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य
पाꣳसुले ॥ १ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदा-
भ्यः। अतो धर्माणि धारयन् ॥ २ ॥ विष्णोः कर्माणि
पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥ ३ ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षु-
राततम् ॥ ४ ॥ तद्विप्रासो विपन्यवो जागृवाꣳसः समि-
न्धते। विष्णोर्यत्परमं पदम् ॥ ५ ॥ अतो देवा अवन्तु
नो यतो विष्णुर्विचक्रमे। पृथिव्या अधिसानवि ॥ ६ ॥
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्। स भूमि
सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ७ ॥ त्रिपादूर्ध्व उ
त्पुरुषः पादोस्येहाभवत्पुनः। तथा विश्वꣳव्यक्रामद
नानशने अभि ॥ ८ ॥ पुरुष एवेदꣳसर्वं यद्भूतं य
भाव्यं। पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि।
तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः। उताम
स्येशानो यदन्नेनातिरोहति ॥ १० ॥ ततो विराड

विराजो अधिपूरुषः । सजातोअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ११ ॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ १२ ॥ किमित्ते विष्णोपरिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि । मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे वभूथ ॥ १३ ॥ प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान्क्षयंतमस्य रजसः पराके ॥ १४ ॥ वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्द्धंतु त्वा सुष्टुतयो गिरो मे यूयंपात स्वस्तिभिःसदा नः ॥ १५ ॥ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्त । धातुर्द्युता नात्सवितुश्च विष्णो रथंतरमाजभारावशिष्ठः ॥ १६ ॥ एतासामन्ते स्वाहाकारोच्चारणपूर्वकं होमाः कर्त्तव्याः । सर्वत्र इदं नारायणाय न मम । तत इदं विष्णुरितिमन्त्रेणाष्टोत्तरसहस्रं शतं वा तिलादिद्रव्येण होमः । ततस्स्विष्टकृतादितन्त्रशेषं प्र-

तत्रत्समापयेत्। ततो देवसमीपे पुरोभागे मधुघृतति-
लमिश्रितेन पृथक्पक्वोदनेन प्राचीनावीती दक्षिणाग्रान्
कुशानास्तीर्य्य, तूष्णीं दशसु स्थानेष्ववनेजनं कृत्वा,
क्रमेणामुकगोत्रामुकप्रेत विष्णुरूप एष ते पिण्ड उपति-
ष्ठतामिति पितृतीर्थेन दश पिण्डान्दत्वा 'आयाम आयाम'
इतिसाम्ना 'यन्मे यम वैवस्वतमिति' पिण्डानभिमन्त्र्य,
शङ्खोदकेन पुरुषसूक्तेन च कुशैः पिण्डोपरि धारां दत्वा,
गन्धादिकं प्रक्षिप्य, पुरुषसूक्त मन्त्रैः प्रत्यृचममुकगोत्रं
प्रेतन्नारायणरूपं तर्पयामीति तर्पयेत्। ततः कलशसमीपे
पुरुषाहारपरिमितमन्नमादायोपवीती ब्रह्मन्नेष ते बलिः।
विष्णो एष ते बलिः। रुद्र एष ते बलिः। सपरिवार
यम एष ते बलिः। इति बलिं दत्वा दर्भेण बलीन्स्पृष्ट्वा,
ब्रह्माविष्णुमहादेवा यमश्चैव सकिङ्करः। बलिं गृहीत्वा
कुर्वन्तु प्रेतस्य च शुभां गतिम्॥ इति सम्प्रार्थ्य, प्रतिदे-
वतं त्रिविधं फलं समर्प्य, शर्करामधुगुडघृतानि निवेद्य,
पिण्डानप्सु प्रक्षिपेत्। ततस्तस्मिन्दिने रात्रावयुग्मान्ब्राह्म-
णान् पञ्च सप्त नव वा निमन्त्रयेत्। यथा—श्वः करिष्यमा-
णनारायणबलिकर्मणि विहितश्राद्धपञ्चके ब्रह्मार्थे भवता
क्षणः कर्त्तव्यः। एवं विष्णुरुद्रयमेभ्यः प्रत्येकं ब्राह्मणं प्रेता-
न्वेवधर्मेण निमन्त्य पितृधर्मेणैकं गुणवन्तं ब्राह्मणं प्रेता
निमन्त्रयेत्। ततः कर्त्ता रात्रावुपोष्य, जागरणं कुर्यात्
ततः प्रभाते मध्याह्ने कलशस्थान् ब्रह्मादीनभ्यर्च्य,
यजमानो ब्राह्मणानुज्ञया विहितं श्राद्धपञ्चकं कौ

विधिना करिष्ये इतिसङ्कल्प्य तथा सर्वं कुर्यात्। विशेषस्तूच्यते। यद्यत्रैष ते पिण्डः। एवं विष्णुरुद्रसपरिवारयमेभ्यः पिण्डान् दत्वा ऽमुकगोत्रामुकप्रेत विष्णुरूप एष ते पिण्डः। इति पञ्चमं पिण्डं दद्यात्। आचान्तान्ब्राह्मणान्दक्षिणादिभिः परितोष्य, प्रेतार्थे ऽभ्यर्च्चितं गुणवन्तं ब्राह्मणं प्रेतबुद्ध्या स्मरन् गोभूहिरण्यदानादिभिः परितोषयेत्। ततोऽक्षय्यस्थाने तुलसीकुशयुतशङ्खधारां ब्राह्मणानां हस्तेषु दद्यात्। ततः पवित्रपाणयो ब्राह्मणा गोत्राय प्रेताय विष्णुरूपायेदं तिलोदकमुपतिष्ठतामिति प्रत्येकं दद्युः। ततस्सुतासोमधुमत्तम इति कलशस्थान्देवानुद्वास्य, ब्राह्मणेभ्यो दत्वा, तान्विसृज्य, स्नात्वा, स्वजनैः सार्कं स्वयम्भुञ्जीत। इति नारायणबलिप्रयोगाः॥

अथ कृच्छ्रादिप्रत्याम्नायाः। "प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम्। पराके तप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गास्तथा"–इति चतुर्विंशतिमते मिताक्षरायाम्॥ पुनस्तत्रैव। "अष्टौ चान्द्रायणे देया" इति। प्राजापत्यादिप्रत्याम्नायाः स्मृत्यन्तरेऽपि द्रष्टव्याः॥

अथ विच्छिन्नश्रौताग्नेर्मृतस्य दहनार्थं प्रेताधानप्रयोगः। त्रिकाण्डमण्डने। "प्रेतं स्वाद्ध्यालये क्षिप्त्वा गार्हपत्यानले ऽरणी। सन्निधाप्यारणी मन्थेयस्येतियजुषा ततः॥ प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा। तूष्णीं हुत्वा ततः कुर्यात्प्रेतेऽमात्या इति क्रियाम्"॥ अथ प्रयो-
। श्रौताग्निविच्छेददिनगणनपूर्वकमुक्तप्रायश्चित्तं कुर्या-

। अथ वक्ष्यमाणं कर्म प्राचीनावीती दक्षिणाभिमुखः
ीत्। यजमानायतने प्रेतं संस्थाप्य, गार्हपत्यादीन्याय-
ानि सकृत्सकृत्संस्कृत्य, गार्हपत्यायतनस्य पश्चादरणी
थाप्य, यस्याग्नयो जुह्वतो मांसकामास्सङ्कल्पयन्ते यज-
नं मांसं जानते हविषे सादिताय स्वर्गं लोकं परेतमिमं
न्तु। इतियजुषा मथित्वाऽग्निं तूष्णीं गार्हपत्ये निधाय
ष्णीमाहवनीयं प्रणयति। तत आज्यस्थाल्यामाज्यं
रूप्य, गार्हपत्यस्य दक्षिणार्द्धेऽधिश्रित्य, दक्षिणत उद्वा-
, पवित्राभ्यामुत्पूयावेक्ष्य, सकृत्स्रुक्स्रुवौ संमृज्य, स्रुचि
दशकृत्व आज्यं गृहीत्वा ऽऽहवनीये तूष्णीं जुहुयात्।
कप्रेताधानं कृत्वा, दाहादिकं कुर्यात् एवं पत्नीमरणेऽपि॥
ति प्रेताधानप्रयोगः॥

अथारण्योस्समारोपितेऽग्नौ मृतस्याग्नेरुत्पत्तिवि-
धेः। त्रिकाण्डमण्डने—"अग्नावरण्योरारूढे प्रमीयेत पति-
दि। प्रेतं स्पृष्ट्वा मथित्वाऽग्निं जप्त्वा चोपावरोहणम्॥
तश्च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया"॥ अथ प्र-
योगः। प्रेतस्य दक्षिणहस्तेनारण्योस्स्पर्शं कारयित्वा
उपावरोह जातवेद इमं प्रेतं स्वर्गाय लोकाय नय आयुः
प्रजा॰ रयिमस्मासु धेहि प्रेताहुतिश्चास्य जुषस्व स्वाहा॥
इतिमन्त्रं पठन्नग्निम्मथित्वा उपावरोहाग्निं गार्हपत्ये
निधाय, तूष्णीमाहवनीयं प्रणीय, पूर्ववत्संस्कृतेनाज्येन
द्वादशगृहीतेन तूष्णीमाहवनीये हुत्वा, पुनः प्रणीय, दाहा-
दिकं कुर्यात्॥

नष्टेष्वग्निष्वरण्योर्नाशे मृतस्याग्नेरुत्पत्तिविधिः। त्रिकाण्डमण्डनः। "नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत्। आहरेदरणीद्वन्द्वं मनोज्योतिर्ऋचा ततः"॥ अन्ये तावदरणी आनीय तदुपरि प्रेतहस्तं निधाय अयन्ते योनिरितिमन्त्रं पठित्वा, पूर्ववत्प्रेताधानं कुर्यात्। सर्वेषां सान्तपनाग्नीनां नाशे गार्हपत्याग्निं मथित्वाऽऽहवनीयदक्षिणाग्नी प्रणीयानादिष्टप्रायश्चित्तमपसव्येन कृत्वोखाधिश्रयणादिकं कुर्यात्। गार्हपत्यमात्रस्य नाशे तं मथित्वाऽनाज्ञातप्रायश्चित्तं कुर्यात्। न सान्तपनाग्निमुत्पादयेत्। आहवनीयदक्षिणाग्न्योरेकस्य द्वयोर्वा विनाशेऽनाज्ञातप्रायश्चित्तार्थमग्निमुद्धृत्य, प्रायश्चित्तं कृत्वा, दहनार्थं पुनरुद्धरेत्॥

अथ केनापि निमित्तेन चिताग्निनाशे यज्ञपार्श्वग्रन्थे, "यजमाने चितारूढे पात्रन्यासे कृते सति। वर्षाद्यभिहते वन्हौ कथं कुर्वन्ति याज्ञिकाः॥ तदर्द्धदग्धकाष्ठेन मन्थनं तत्र कारयेत्। तच्छेपालाभतोऽन्येन दग्धशेषेण वा पुनः। हुत्वाऽज्यं लौकिके वह्नौ दग्धशेषं दहेत्तु वा॥ वर्षादिना चिताग्निनाशेऽर्द्धदग्धेऽरणी गृहीत्वा, अग्निं मथित्वा, तेनाग्निना दग्धशेषं दहेत्। तदलाभे लौकिकाग्नौ सर्वज्याहुतीर्हुत्वा तेनाग्निनादहेत्। "दग्धशेषस्याप्सु प्रक्षेप" इति केचित्॥

अथ विच्छिन्नस्मार्त्ताग्नेर्मृतस्याऽग्न्याधानविधिः। विच्छि[illegible]गणनया तदुक्तप्रायश्चित्तं कृत्वा, अग्न्यायतनं

संस्कृत्य, प्रेतं स्वायतने संस्थाप्य, तद्धस्तमरण्योर्निधाय
स्येतियजुषा मथित्वा ऽऽयतनेनिधायाज्यं संस्कृत्य, तूष्णीं
पूर्णाहुतिं जुहुयात्। आहरणपक्षे अन्यतोऽग्निमानीय
प्रेतं संस्पृश्य, यस्याग्नय इतिपूर्वोक्तमन्त्रेणाग्निं जपित्वा
तमायतने निधाय, पूर्ववत्पूर्णाहुतिं जुहुयात्। समारो
पणपक्षे मन्थनोपावरोहणादिकं पूर्ववत्कुर्यात्। अरण्योर्वि
नाशे पूर्ववत्। नात्राहवनीयप्रणयनमसम्भवात्। इ
विच्छिन्नस्मार्त्ताग्नेर्मृतस्य कृत्यविधिः॥

अथाहिताग्नौ प्रोषितमृते दाहविधिः। "आहित
ग्नौ विदेशस्थे मृते सति कलेवरम्। निधेयं नाग्निभि
वत्तदीयैरपि दह्यते"इति प्राज्ञोक्तेः॥ सतिसम्भवे
शरीरं तैलद्रोण्यां निक्षिप्याग्निहोत्रसमीपे नेयम्। अ
म्भवे छन्दोगपरिशिष्टे—"विदेशमरणेऽस्थीनि आहृ
भ्यज्य सर्पिषा। दाहयेदूर्णयाऽऽच्छाद्य पात्रन्यासादि
पत्॥ अस्थ्नामलाभे पर्णानि पलाशान्युक्तयावृता।
पेदस्थि संख्यानि ततः प्रभृति सूतकम्"॥ मृतस्य
रीरस्य दिनान्तरे दहने पर्युषितशावधित्तं स्मृतिरु
दशाम्। "शवं राज्युषितञ्चेत्तेन् कृच्छ्रान्कृत्वा दहेत्तु
अङ्गिराः,—"ऊर्ध्वोच्छिष्टाधरोच्छिष्टे सन्तरिक्षमृतेऽ
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च"॥
वचनाम् "स्त्रूणां मरणे चैव त्रीहीन्कृच्छ्रान्चरेत
सप्तान्त्यजेस्तु संस्पृष्टो मृतो देशान्तरे यन॥
दाता कृच्छ्रैः शुद्धिरत्र मनीषिभिः। कृच्छ्रे

तु चितिः स्पृष्टाऽन्त्यजातिभिः । तत्स्पर्शनं दूषणञ्च त्रिभिः कृच्छ्रैर्विशुद्ध्यति'' इति ॥ अथ प्रयोगः । दूरदेशप्रवसत आहिताग्नेर्मरणश्रवणे तच्छरीरस्यास्थ्नां वाऽग्निहोत्रगृहग्रामपर्यन्तं यावता कालेनानयनं सम्भवति तावत्पर्य्यन्तं गृहे सायम्प्रातरग्निहोत्रं पुत्रादिभिः कर्त्तव्यम् । अतो मृताग्निहोत्रप्रयोग उच्यते । प्राचीनावीती दक्षिणाभिमुखः सङ्कल्प्याहवनीयमात्रं प्रणीयाहवनीयं दक्षिणसंस्थमप्रादक्षिण्येन दक्षिणाग्रैर्दर्भैः परिस्तृणुयात् । दक्षिणत उत्तरतः प्रागग्रैरेवाहवनीयं तूष्णीमप्रादक्षिण्येन परिषिच्य, न प्रेषस्तूष्णीं गां दोहयित्वा, गार्हपत्यदक्षिणाङ्गे उष्णभस्मन्यधिश्रयेत् । नाभिद्योत इति, न पर्य्यग्निकरोति । न संक्षालनं, न निनयनम्, दक्षिणत उद्वासनम्, न त्रिः, तूष्णीं स्रुक्स्रुवावादाय, तूष्णीं प्रताप्य, हस्तेन सम्मृज्य, सकृदुन्नयेत् । ॐ नेष्यामीति न प्रेषः । अधोमुखेन स्रुवेण स्रुचि हविषः प्रक्षेपः । न मध्ये कूर्चे आसादनम् । स्रुग्दण्डस्याधोभागे समिधं धारयन्, गार्हपत्यस्य दक्षिणतो गत्वा ऽऽहवनीयस्योत्तरतो दक्षिणाभिमुख उपविश्याहवनीये तूष्णीं दक्षिणाग्रां समिधमाधाय तूष्णीं पितृतीर्थेन निश्शेषं सकृदेव हविर्जुहुयात् । नातः परमग्निहोत्रम् । इति प्रेताग्निहोत्रविधिः । ततो मृतशरीरस्यास्थ्नां वाऽग्निहोत्रदेशसीमायामानयने कृते तत्समीपे ऽग्नीन् पात्राणि च नीत्वा, विदेशमरणप्रायश्चित्तं पराकद्वयमष्टौ कृच्छ्रान्वा कृत्वा, शरीरे सति शवपर्य्युषितत्वदोषप्राय-

श्चित्तार्थं कृच्छ्रत्रयञ्च कृत्वा, विधिवद्दहेत् ॥ अस्थिदाहे तु,-"आहृतान्यस्थीनि कृष्णाजिनोपरि पुरुषाकारेण कृत्वाऽऽज्येनाभ्यज्य, बर्हिषाऽऽच्छाद्य, देशान्तरमरणप्रायश्चित्तपूर्वकं विधिवद्दहेत्" ॥ इत्याहिताग्नौ प्रोषितमृते दाहविधिः ॥

अथास्थ्यलाभे पर्णदाहविधिः। पूर्ववद्विदेशमरणप्रायश्चित्तं कृत्वा, देशकालौ सङ्कीर्त्य, विदेशमृतस्य विधिवद्दहनार्थं पालाशैर्दर्भैर्वा पुरुषाकृतिं करिष्ये इति सङ्कल्प्य, शुद्धभूमौ कृष्णाजिनमास्तीर्य्य, तदुपर्य्येकं शरं दक्षिणोत्तरायतं निधाय, पलाशवृन्तानि पुरुषाकारेण स्थापयेत्। तद्यथा। शिरसि चत्वारिंशत् ४० ग्रीवायां दश १० दक्षिणबाहौ पञ्चाशत् ५० वामबाहौ पञ्चाशत् ५० हस्ताङ्गुलीषु दश १० वक्षसि विंशतिः २० उदरे त्रिंशत् ३० मेढ्रे चत्वारि ४ वृषणयोः षट् ६ दक्षिणोरौ पञ्चाशत् ५० तथैव वामे ५० जङ्घादिपादतलान्तं प्रत्येकं पञ्चदश १५ पञ्चदश १५। पादाङ्गुलीषु दश १० एवं षष्ठ्युत्तरत्रिशतसंख्याकैः पालाशैर्दर्भैर्वा प्रेताकृतिं कृत्वोर्णासूत्रेण दर्भैश्च बध्वा जलमिश्रितयवपिष्टेनानुलिप्य शुद्धमृदा चानुलिप्य विधिवद्दहेत् ॥ इति पर्णदाहविधिः ॥

इति श्रीमद्राजाधिराजश्रौतस्मार्त्तानुष्ठानतत्परोदयप्रतापाद्यादत्तदेववर्म्मसोमयाजिनो निदेशेन लक्ष्मणपण्डितेन विरचितेयमन्त्येष्टिदीपिका समाप्ता ॥ शुभम् ॥

# अन्त्येष्टिदीपिकाशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ. | पं. | अशुद्धम् | शुद्धम् | पृष्ठे | पं. |
|---|---|---|---|---|---|---|---|
| पदन्ति | पद्न्ति | १ | ७ | २ १<br>व्य रू | १ १<br>व्य । रू | २७ | ९ |
| तानि प्रपद्यते | तानि प्रपद्ये | १४ | ३ | ३२<br>ओ ह्रो | ३२<br>ओ ह्रो | ३३ | १ |
| १<br>दा३४२सी | १<br>दा२३४सी | १७ | १ | मासन | मासनं | ३९ | १४ |
| प्रज्ञा | माला | ० | ५ | अपोशना | आपोशना | ४९ | १७ |
| जगयः | जगतः | ० | १२ | त्वमनु | त्वामनु | ५६ | १ |
| २१ १<br>निषद्धि | २ १<br>निषद्धि | २० | ४ | स्पृष्टो | स्पष्टो | ६६ | २ |
| उदमध्ये | ऊदमध्ये | २२ | ९ | शमति | समति | ० | २२ |
| जितौ | २<br>जितौ | २४ | १३ | वसुभ्यः | वसुभ्यो | ७४ | १ |
| – १<br>भा२या | – २<br>भा२या । | २६ | ११ | मायर्यो | मावर्पो | ७८ | ५ |
| | | | | वापनः | वापुनः | ८२ | १६ |

इति शुद्धिपत्रम् ।

